# ॥ अथ वासिष्ठीहवनपद्धतिप्रारम्भः ॥

श्रीगणेशाय नमः ॥ अथ वासिष्ठीहवनपद्धतिः ॥ तत्रादौ प्रतिज्ञासङ्कल्पः ॥ विष्णु विंष्णुर्विष्णुः ॐ नमः परमात्मने श्रीपुराणपुरुषोत्तमाय श्रीपरमेश्वराज्ञया अद्य ब्रह्मणो द्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वंतरे अष्टाविंशतितमे कलियुगे प्रथमचरणे जंबूद्वीपे भारतवर्षे भरतखण्डे आर्यावर्तांतर्गतब्रह्मावर्तैकदेशे महाश्मशाने आनंदवने अविमु क्तवाराणसीक्षेत्रे गौरीमुखे त्रिकंटकविराजिते विक्रमशके बौद्धावतारे वर्तमाने यथानाम संवत्सरे अमुकायने महामांगल्यप्रदे मासोत्तमे मासे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकर्क्षे अमुकराशिस्थिते सूर्ये अमुकराशिस्थितेषु चंद्रभौमबुधगुरुशुक्रशनिषु शुभनामयोगे शुभकरणे एवं गुणविशेषणविशिष्टायां शुभपुण्यदिने सकलश्रुतिस्मृतिपुरा णोक्तफलप्राप्तिकामः अमुकगोत्रोत्पन्नः अमुकशर्माहं ममात्मनः सपुत्रबांधवस्य नवग्रहानुग्रह द्वारा ग्रहकृतराजकृतसर्वविधपीडानिवृत्तिपूर्वकनैरुज्यदीर्घायुःपुष्टिधनधान्यसमृद्ध्यर्थं नव ग्रहमखेन यक्ष्ये । इति संकल्पः ॥ १ ॥ अथ वरणम् ॥ पटमंडपादिकरणं तदभावेऽन्येनाच्छा

वा. इ.

॥ ३ ॥

दनम् । ततः स्वास्तिवाचनम् ॥ ॐ स्वस्तिनऽइन्द्रो वृद्धश्रवाः स्वस्तिनः पूषाविश्ववेदाः ॥
स्वस्तिनस्ताक्ष्यो अरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु ॥ १ ॥ पृषदश्वामरुतः पृश्निमा
तरः शुभं यावानो विदथेषु जग्मयः ॥ अग्निजिह्वामनवः सूरचक्षसो विश्वेनो देवाऽअवसा
गमन्निह ॥ २ ॥ भद्रंकर्णेभिः शृणुयामदेवा भद्रं पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवाꣳस
स्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ ३ शतमिन्नुशरदोऽअन्तिदेवा यत्रानश्चक्राजरसंतनूनाम् ॥
पुत्रासोयत्रपितरो भवन्ति मानोमध्यारीरिषतायुर्गन्तोः ॥ ४ ॥ अदितिर्द्यौरदितिरन्तरिक्षमदि
तिर्मातासपितासपुत्रः ॥ विश्वेदेवा अदितिः पञ्चजनाऽअदितिर्जातमदितिर्जनित्वम् ॥ ५ ॥
दीर्घायुत्वायबलायवर्चसे सुप्रजास्त्वाय सहसा ॥ अथोजीवशरदश्शतम् ॥ ६ ॥ ॐ द्यौः
शान्तिरन्तरिक्षꣳशान्तिः पृथिवीशान्तिरापः शान्तिरोषधयः शान्तिः ॥ वनस्पतयः शान्ति
र्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्वꣳशांतिः शान्तिरेव शान्तिः सामाशान्तिरेधि ॥ सुशांतिर्भ
वतु ॥ ७ ॥ इति स्वस्तिवाचनम् ॥ २ ॥ अथ पुण्याहवाचनम् ॥ तत्रादौ ब्राह्मणकरे । शिवा

पद्ध.

॥ ३ ॥

आपः संतु । ब्राह्मणवचनम् । सौमनस्यमस्तु ॥ एवम् अक्षताः पांतु । मांगल्यमस्तु ॥ पुष्पाणि पांतु । श्रीरस्तु । तांबूलानि पांतु । ऐश्वर्यमस्तु । दक्षिणाः पांतु । आरोग्यमस्तु । दीर्घायुः शांतिः पुष्टिस्तुष्टिःश्रीर्यशोविद्याविनयोबहुपुत्रं बहुधनं चास्तु ॥ ३॥ यं कृत्वा सर्ववेदयज्ञक्रियारंभाः शोभनाः प्रवर्तंते तमहमोंकारमादिं कृत्वा ऋग्यजुःसामाथर्वणाशीर्वचनं बहृषिमतं समनुज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये ॥ वाच्यतामितिब्राह्मणवचनम् ॥ पुनः यजमानो ब्रूयात् । व्रतनियमतपस्स्वाध्यायक्रतुदमदानविशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम् । ब्राह्मणाः—समाहितमनसःस्मः ॥ यजमानो ब्रूयात् । प्रसीदन्तु भवंतः । ब्राह्मणाः प्रसन्नाः स्म ॥ ४ ॥

ततो यजमानः । अवनिकृतजानुमण्डलः कमलमुकुलसदृशमंजलिं शिरस्याधाय दक्षिणेन पाणिना जलपूर्णं सुवर्णकलशं धारयित्वा भूमौ स्थापिते पात्रद्वये प्रथमपात्रे किंचिदुदकं पातयेत् । तत्र ब्राह्मणावदेयुः ॐ शांतिरस्तु । पुष्टिरस्तु । वृद्धिरस्तु । ऋद्धिरस्तु । अविघ्नमस्तु । आयुष्यमस्तु । आरोग्यमस्तु । शिवमस्तु । शिवं कर्मास्तु । कर्मसमृद्धिरस्तु । पुत्रसमृद्धिरस्तु । वेदसमृद्धि

रस्तु । शास्त्रसमृद्धिरस्तु । धनधान्यसमृद्धिरस्तु । इष्टसंपदस्तु । अरिष्टनिरसनमस्तु । यच्छ्रेयस्तदस्तु । ततः द्वितीयपात्रे पातयेत् । यत्पापमशुभमकल्याणं तद्दूरे प्रतिहतमस्तु । पुनः प्रथमपात्रे पातयेत् । उत्तरोत्तरकर्मण्याविघ्नमस्तु । उत्तरोत्तरमहरहरभिवृद्धिरस्तु । उत्तरोत्तराः क्रियाः शुभाः शोभनाः संपद्यंताम् । तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयंताम् । तिथिकरणे सुमुहूर्ते सुनक्षत्रे सुग्रहे सुदैवते प्रीयेताम् । आग्निपुरोगा विश्वेदेवाः प्रीयंताम् । इंद्रपुरोगा मरुद्गणाः प्रीयंताम् । माहेश्वरीपुरोगा उमा मातरः प्रीयंताम् । वसिष्ठपुरोगा ऋषिगणाः प्रीयंताम् । अरुंधतीपुरोगा एकपत्न्यः प्रीयंताम् । ब्रह्मपुरोगाः सर्वे वेदाः प्रीयंताम् । विष्णुपुरोगाः सर्वे देवाः प्रीयंताम् । ऋषयश्छंदांस्याचार्या वेदा देवा यज्ञाश्च प्रीयंताम् । ब्रह्म च ब्राह्मणाश्च प्रीयंताम् । अम्बिकासरस्वत्यौ प्रीयेताम् । श्रद्धामेधे प्रीयेताम् । दुर्गापांचाल्यौ प्रीयंताम् । भगवती कात्यायनी प्रीयताम् । भगवती माहेश्वरी प्रीयताम् । भगवती ऋद्धिकरी प्रीयताम् । भगवती वृद्धिकरी प्रीयताम् । भगवती पुष्टिकरी प्रीयताम् ।

भगवती तुष्टिकरी प्रीयताम् । भगवन्तौ विघ्नविनायकौ प्रीयेताम् । सर्वाः कुलदेवताः प्रीयंताम् । सर्वाग्रामदेवताः प्रीयंताम् । सर्वा इष्टदेवताः प्रीयंताम् । पुनः द्वितीयपात्रे पातयेत् । हताश्च ब्रह्मद्विषः । हताश्च परीपंथिनः । हताश्च विघ्नकर्त्तारः । हताश्च विघ्नकराः । शत्रवः पराभवं यांतु । शाम्यंतु घोराणि । शाम्यन्तु पापानि । शाम्यन्त्वीतयः । पुनः प्रथमपात्रे पातयेत् । शुभानि वर्द्धंताम् । शिवा आपः संतु । शिवा ऋतवः सन्तु । शिवा अग्नयः संतु । शिवा आहुतयः संतु । शिवा वनस्पतयः सन्तु । शिवाआतिथयः सन्तु अहोरात्रे शिवे स्याताम् । निकामेनिकामेनः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यंताम् । योगक्षेमो नः कल्पताम् । शुक्रांगारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमादित्यरूपाः सर्वे ग्रहाः प्रीयंताम् । भगवान्नारायणः प्रीयताम् । भगवान्पर्जन्यः प्रीयताम् । भगवान्स्वामीमहासेनः प्रीयताम् । पुरोनुक्यया यत्पुण्यं तदस्तु । याज्यया यत्पुण्यं तदस्तु । वषट्कारेण यत्पुण्यं तदस्तु । प्रातः सूर्योदये यत्पुण्यं तदस्तु ॥ ९॥ ततो यजमानः सुवर्णकलशं भूमौ निधाय प्रथमपात्रपतितजलेन शिरः संमृज्य

 सपरिवारगृहांश्चाभिषेचयेत् ॥ द्वितीयपात्रजलमेकांते पातयेत् ॥ ६ ॥ यजमानो ब्रूयात् 
 ब्राह्मं पुण्यमहर्यच्च सृष्ट्युत्पादनकारकम् । वेदवृक्षोद्भवं पुण्यं तत्पुण्याहं ब्रुवंतु नः । भो ब्राह्मणाः
ममसपरिवारस्य गृहे पुण्याहं भवंतो ब्रुवंतु । ( ब्राह्मणाः ) ॐ पुण्याहम् ३ । पुनंतु मादे
वजनाः पुनंतु मनसाधियः । पुनंतु विश्वाभूतानि जातवेदः पुनीहिमा ॥ ( यजमानः ) पृथि
व्यामुद्धृतायांतु यत्कल्याणं पुराकृतम् । ऋषिभिः सिद्धगंधर्वैस्तत्कल्याणं ब्रुवंतु नः ॥
भो ब्राह्मणाः मम सपरिवारस्य गृहे कल्याणं भवन्तो ब्रुवन्तु ( ब्राह्मणाः ) ॐ कल्याणम् ३ ।
यथेमां वाचं कल्याणीमावदानिजनेभ्यः । ब्रह्मराजन्याभ्या ँ शूद्रायाचार्य्याय च स्वाय
चारणाय च ॥ प्रियो देवानां दक्षिणायै दातुरिह भूयासमयंमे कामः समृद्ध्यतामुपमादोनमतु ॥
( यजमानः ) सामरस्य च या लक्ष्मीर्महालक्ष्म्यादिभिः कृता । संपूर्णासुप्रभावा च तां च ऋद्धिं 
ब्रुवंतु नः । भो ब्राह्मणाः मम सपरिवारस्य गृहे ऋद्धिं भवंतो ब्रुवंतु ॥ ( ब्राह्मणाः ) ॐ ऋद्ध्यताम् ३ ।
सत्रस्य ऋद्धिरस्य गन्मज्योतिरमृताऽअभूम ॥ दिवं पृथिव्याऽअद्ध्यारुहामाविदामदेवान्त्स्व

ज्यौंतिः ॥ ( यजमानः ) । स्वस्त्यतुह्यविनाशाख्यानित्यं मंगलदायिनी । विनायकप्रिया नित्यं तां च स्वस्तिं ब्रुवंतु नः । भो ब्राह्मणाः मम सपरिवारस्य गृहे स्वस्तिं भवंतो ब्रुवंतु ॥ ( ब्राह्मणाः ) ॐ स्वस्ति २ । स्वस्तिनऽइंद्रो वृद्धश्रवाः स्वस्तिनः पूषाविश्ववेदाः । स्वतिनस्तार्क्ष्यो ऽअरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु ॥ ( यजमानः ) समुद्रमथनाज्जाता जगदानंदकारिका ॥ हरिप्रिया च मांगल्या तां श्रियं च ब्रुवंतुनः ॥ भो ब्राह्मणाः मम सपरिवारस्य गृहे श्रीरस्त्विति भवंतो ब्रुवंतु । ( ब्राह्मणाः ) ॐ अस्तु श्रीः २ । श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाण सर्वंलोकम्मऽइषाण ॥ ततस्तिलकाशीर्वादः ॥ अथ दक्षिणादानम् ॥ ॐ अद्यपुण्याहवाचनसांगतासिद्ध्यर्थं पुण्याहवाचकेभ्यो नानानामगोत्रेभ्यो ब्राह्मणेभ्य इमां यथाशक्तिहिरण्यदक्षिणां संप्रददे ॥ इति पुण्याहवाचनम् ॥ ७ ॥ अथवरणम् ॥ पूर्वमाचार्य्यस्य वरणं पश्चात्सर्वेषां वरणम् । तद्यथा । आचार्यं प्रतियजमानो ब्रूयात् अस्मिन्नासने आस्यताम् ॥ आचार्यो ब्रूयात् आस्ये ॥ ततो यजमानः

नमोस्त्वनन्तायेतिमंत्रेण पादप्रक्षालनं कुर्यात् ॥ नमोस्त्वनंताय सहस्रमूर्तये सहस्रपादाक्षिशिरो रुबाहवे । सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥ १ ॥ नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ॥ जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥ २ ॥ गंधमाल्यादिभिरभ्यर्च्य ॐ युञ्जन्ति ब्रध्नमरुषं चरंतं परितस्थुषः रोचंते रोचनादिवि ॥ युंजंत्यस्य काम्या हरीविपक्षसारथे ॥ शोणाधृष्णूनृवाहसा ॥ १ ॥ ॐ अद्येत्यादि नवग्रहमखहोमकर्मकर्तुमेभिश्चंदनतांबूलकुण्डलांगुलीयककमण्डलुवासोभिराचार्यत्वेन अमुकगोत्रममुकशर्माणममुकवेदाध्यायिनं त्वामहं वृणे इति वृणुयात् ॥ आचार्यो वृतोऽस्मि इति प्रतिवचनं दद्यात् । ॐ व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् ॥ दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ॥ इत्यनेन मंत्रेण कुशस्थैर्जलबिंदुभिर्यजमानमभिषिंचेत् । अथ यजमानेनाचार्यप्रार्थना ॥ आचार्यस्तु यथास्वर्गे शक्रादीनां बृहस्पतिः ॥ तथात्वं मम यज्ञेऽस्मिन्नाचार्यो भवस्रुव्रत ॥ १ अथ ब्रह्मवरणम् ॥ ब्रह्माणं प्रति यजमानो ब्रूयात् अस्मिन्नासने आस्यताम् ।

( ब्राह्मणः ) आस्ये । ततो यजमानः नमोस्त्वनंतायेतिमंत्रेण पादप्रक्षालनं कुर्य्यात् । गंधपुष्प माल्यादिभिरभ्यर्च्य ॐ अद्येत्यादि नवग्रहमखहोमकर्माणि न्यूनाधिक्यपरिहारार्थंमोभिश्चंदन तांबूलकुण्डलांगुलीयककमंडलुवासोभिर्ब्रह्मत्वेनामुकगोत्रममुकशर्माणममुकवेदाध्यायिनं त्वा महं वृणे । ( ब्राह्मणः ) वृतोस्मि इति प्रतिवचनम् । ( यजमानः ) यथाचतुर्मुखोब्रह्मासर्ववेद धरः प्रभुः ॥ तथा त्वं मम यज्ञेऽस्मिन्ब्रह्माभवसुरोत्तम ॥१॥ ( ब्रह्मा ) ॐ व्रतेन दीक्षामाप्नोति दी क्षयाप्नोति दक्षिणाम् ॥ दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ॥ इत्यनेन मंत्रेण कुशस्थैर्ज लबिन्दुभिर्यजमानमभिषिंचेत् ॥ अथ ऋत्विग्वरणम् ॥ ऋत्विजं प्रति यजमानो ब्रूयात् इदमासनमास्यताम् । ( ऋत्विक् ) आस्ये । ततो यजमानः नमोस्त्वनंतायेति मंत्रेण पादप्रक्षा लनं कुर्य्यात् । गंधपुष्पमाल्यादिभिरभ्यर्च्य ॐ अद्येत्यादिनवग्रहमखहोमकर्माणिहवनं कर्तुंमोभिश्चंदनतांबूलकुंडलांगुलीयककमण्डलुवासोभिः ऋत्विक्त्वेन अमुकगोत्रममुक शर्माणममुकवेदाध्यायिनं त्वामहं वृणे ( ऋत्विक् ) वृतोस्मि इति प्रतिवचनम् ( यज० ) ऋग्वेदः

 

पद्मपत्राक्षो गायत्रः सोमदैवतः ॥ अत्रिगोत्रस्तु विप्रेन्द्रऋत्विक्त्वं मे मखे भव ॥ १ ॥ ( ऋत्विजः )
ॐ व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् ॥ दक्षिणाश्रद्धामाप्नोति श्रद्धया सत्य
माप्यते ॥ इत्यनेन मंत्रेण कुशस्थैर्जलबिन्दुभिर्यजमानमभिषिञ्चेत् । एवमध्वर्युं होतारं सदस्य
मुपद्रष्टारं च वृणुयात् ॥ अथ यजमानेन सर्वेषां प्रार्थना ॥ त्वं गुरुश्च पिता माता त्वं प्रभुस्त्वं परा
यणम् ॥ त्वत्प्रसादाच्च विप्रर्षे सर्वं मे स्यान्मनोगतम् ॥ १ ॥आपद्विमोक्षणार्थाय कुर्युर्यज्ञमतंद्रिताः॥
ऋत्विजः सहिताः शुक्लाः संयताः सुसमाहिताः ॥ २ ॥ आचार्येण च संयुक्ताः कुर्युः कर्म
यथोदितम् ॥ भगवन्सर्वधर्मज्ञ सर्वधर्मभृतां वर ॥ ३ ॥ वितते मम यज्ञेऽस्मिन्नुपद्रष्टा भव द्विज ॥ ८ ॥
अथ रक्षाभिधानं वा रक्षाबन्धनम् । तत्रादौ श्वेतसर्षपतंडुलपूर्णं पुटकमादाय रक्षासूत्रं सफलद ॥ ९ ॥
क्षिणाकं गृहीत्वा मंत्रान् पठित्वा सर्षपाक्षतैर्दिग्रक्षां कुर्यात् ॥ ॐ पूर्वे रक्षतु वाराह आग्नेय्यां ग
रुडध्वजः ॥ दक्षिणे पद्मनाभस्तु नैर्ऋत्यां मधुसूदनः ॥ पश्चिमे चैव गोविंदो वायव्यां तु जनार्दनः ॥
उत्तरे श्रीपतीरक्षेदीशान्यां हि महेश्वरः ॥ ऊर्ध्वं रक्षतु धाताबोह्य धोऽनंतश्च रक्षतु ॥ एवमुक्तमपिय

त्स्थानं रक्षत्वीशोममाद्रिधृक् । इति ततो रक्षासूत्रम् । ॐ येन बद्धो बलीराजादानवेन्द्रो महाबलः । तेन त्वामपि बध्नामि रक्षे माचल माचल । आचार्यस्य यजमानगात्रप्रमाणम् । अन्येषां प्रमाणं न इति आचार्यादिवरणम् ॥ ९ ॥ अथ कलशस्थापनम् ॐ भूरसिभूमिरस्यादितिरसिविश्व धाया विश्वस्य भुवनस्य धर्त्रीपृथिवीं यच्छ पृथिवीन्दृ २ हपृथिवीं माहि २ सीः ॥ इति मंत्रेण गंधादिभिः पृथ्वीमभिपूज्य हस्तेन स्पर्शं कुर्यात् ॥ ॐ मानस्तोकेतनये मानऽआयुषिमानोगोषु मा नोऽअश्वेषु रीरिषः ॥ मानोव्वीरान्रुद्रभामिनोव्वधीर्हविष्मंतः सदमित्वाहवामहे ॥ इति मंत्रेण कलशे गोमयस्पर्शं कुर्यात् । ॐ धान्यमसिधिनुहिदेवान्प्राणायत्वोदानायत्वा व्यानाय त्वा ॥ दीर्घामनुप्रसितिमायुषेधांदेवो वः सविताहिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वामहीनाम्पयोसि ॥ इति मंत्रेण धान्यराशिं कृत्वा ॥ ॐ आजिघ्रकलशं मह्यात्वाविशन्त्वि न्द्वः पुनरूर्ज्जीनिवर्तस्वसानः सहस्रन्धुक्ष्वोरुधारापयस्वतीपुनर्माविशताद्रयिः ॥ इति मंत्रेण कलशस्पर्शं कुर्य्यात् । ॐ वरुणस्योत्तम्भनमसि व्वरुणस्यस्कम्भसर्जनीस्थो व्वरुणस्यऽऋ

वा. इ.

॥ ८ ॥

तसदन्यासि व्वरुणस्यऽऋतसदनमासिव्वरुणस्यऽऋतसदनमासीद । इति मंत्रेण कलशे जलं पद्ध.
द्द्यात् । ॐ पवित्रेस्थोव्वैष्णव्यौसवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मि
भिः ॥ इति मंत्रेण कलशे पवित्रं दद्यात् ॥ ॐ अंबेऽअम्बिकेऽम्बालिकेनमानयतिकश्चन ॥
ससस्त्यश्वकः सुभद्रिकांकाम्पीलवासिनीम् ॥ इति मंत्रेण कलशे पंचपल्लवान्दद्यात् ॥ ॐ प्राणा
य स्वाहाऽपानाय स्वाहा व्यानाय स्वाहा इति मंत्रेण कलशे तांबूलं दद्यात् ॥ ॐ याः फलिनीर्य्याऽ
अफलाऽअपुष्पायाश्चपुष्पिणीः बृहस्पतिप्रसूतास्तानोमुञ्चन्त्व॑ᳪहसः ॥ इति मंत्रेण कलशे
पूगीफलं नारिकेलं वा दद्यात् । ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकऽआसीत् ॥
सदाधारपृथिवींद्यामुतेमां कस्मै देवाय हविषाविधेम ॥ इति मंत्रेण कलशे हिरण्यमन्यद्रव्यं वा द
द्यात् ॥ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहासूर्य्योज्योतिर्ज्योतिः सूर्य्यः स्वाहा ॥ अग्निर्वर्चो ॥ ८ ॥
ज्योतिर्वर्चः स्वाहा सूर्योवर्चोज्योतिर्वर्चः स्वाहा ॥ ज्योतिः सूर्य्यः सूर्योज्योतिः स्वाहा ॥
इति मंत्रेण कलशसमीपे पूर्वदिशि एकस्मिन्पात्रे दीपं निदध्यात् ॥ इति कलशस्वरूपम् ॥ १० ॥

अथ कलशाधिष्ठातृदेवतानामावाहनम् ॥ ॐ सरितः सागराः शैलास्तिर्थानि जलदानदाः ॥
आयान्तु यजमानस्य दुरितक्षयकारकाः ॥ इति मंत्रेण कलशे गंधाक्षतपातः ॥ कलशस्य मुखे वि
ष्णुः कंठे रुद्राः समाश्रिताः । मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणः स्मृतः॥कुक्षौ तु सागराः सर्वे
सप्तद्वीपावसुंधरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदोह्यथर्वणः ॥ अंगैश्च सहिताः सर्वे कलशंतु समा
श्रिताः ॥ इत्यावाह्य पूजनं कुर्यात् ॥ तत्रादौ संकल्पः ॥ महामांगल्यप्रदे मासोत्तमेऽमुक
मासेऽमुकपक्षेऽमुकतिथौ अमुकगोत्रस्याऽमुकशर्मणः सपरिवारस्य निखिलकामनावाप्त्यर्थं
कर्त्तव्यममुककर्मकर्तुं कलशाधिष्ठातृदेवतानां पूजनमहं करिष्ये ॥ इति संकल्प्य ॐ कल
शाधिष्ठातृदेवताभ्यो नमः । इति मंत्रेण गंधादिभिः संपूज्य पुष्पांजलिं निवेद्य नतिं कुर्यात् ॥ अथ
कलशप्रार्थना ॥ देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि तदा कुंभ विधृतो विष्णुना
स्वयम् ॥ त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठंति भूतानि त्वयि प्राणाः
प्रतिष्ठिताः ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः । आदित्यावसवो रुद्रा विश्वे

देवाः सपैतृकाः ॥ त्वयि तिष्ठंति सर्वेऽपि ये च कामफलप्रदाः । त्वत्प्रसादादिमं यज्ञं कर्तुमीहे
जलोद्भव ॥ सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥ इति कलशस्थापनम् ॥ ११ ॥ अथ कल
शाग्रे पश्चिमादिशि गणेशाम्बिकयोः पूजनम् । तत्रादौ हस्ते गंधाक्षतपुष्पाणि गृहीत्वा गणेशावा
हनं कुर्य्यात् । ॐ एह्येहि हेरम्बमहेशपुत्रसमस्तविघ्नौघविनाशदक्ष ॥ मांगल्यपूजाप्रथमप्रधानं
गृहाण पूजां भगवन्नमस्ते । ॐ गणनांत्वागणपति ँ हवामहे प्रियाणान्त्वा प्रियपति ँ हवामहे
निधीनान्त्वानिधिपति ँ हवामहे व्वसो मम आहमजानि गर्भधमात्वमजासिगर्भधम् ॥ आग
च्छभगवन्देव स्वस्थानात्परमेश्वर ॥ अहं पूजां करिष्यामि सदा त्वं संमुखो भव ॥ १ ॥ इत्यावाह्य
पूजयेत् । एतत्पाद्यं गणपतये नमः एषोऽर्घो गणपतये नमः । एतत्स्नानीयजलं गणपतये नमः । ॥ ९ ॥
इमेवस्त्रयज्ञोपवीते गणपतये नमः । इदं गंधं गणपतये नमः । इमे अक्षताःगणपतये नमः । इदं पुष्पं
गणपतये नमः । ॐ धूरसिधूर्वतं योस्मान्धूर्वतितंधूर्वयं धूर्वामः ॥ देवानामसिवह्नितम ँ सस्नि
तमम्पप्रितमंजुष्टतमंदेवहूतमम् ॥ इति मंत्रेण धूपं गणपतये नमः । ॐ अग्निर्ज्योतिरितिमंत्रेण दीपं

गणपतये नमः । नैवेद्यं गणपतये नमः । आचमनीयं गणपतये नम ॥ तांबूलं गणपतये नमः ॥ फलं दक्षिणां च गणपतये नमः ॥ अथविशेषार्घः । रक्षरक्षगणाध्यक्षरक्षत्रैलोक्यरक्षक । भक्तानामभयं कर्ता त्राता भव भवार्णवात् ॥ १ ॥ द्वैमातुरकृपासिंधो प्रभोषाण्मातुराग्रज ॥ वरदस्त्वं वरं देहि वांछितं वांछितार्थद ॥ गृहाणार्घमिमं देव सर्वदेवनमस्कृत ॥ अनेन फलदानेन फलदस्स्यास्सदा मम ॥ २ ॥ इति विशेषार्घः ॥ अथ पुष्पांजलिः ॥ मालती मल्लिकाजाती शतपत्रादिसंयुतम् । पुष्पांजलिं गृहाणेश तव पादयुगार्पितम् ॥ पुष्पांजलिं दत्त्वा ॐ एतान्यर्चनानि पाद्यार्घस्नानवस्त्रयज्ञोपवीतगंधाक्षतपुष्पधूपदीपनैवेद्याचमनीयतांबूलफलदक्षिणा पुष्पांजल्यंतानि परिपूर्णानि भवंतु । अनेन पूजनेन गणपतिः प्रीयताम् ॥ अथ प्रार्थना ॥ विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय । नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते । इति प्रार्थना ॥ १२॥ अथ गौरीपूजनम् । ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाणमुम्मऽइषाणस

वंलोकम्मऽइषाण ॥ ॥ सर्वमंगलमांगल्ये शिवे सर्वार्थसाधिके ॥ शरण्ये त्र्यंबके गोरि नारायणि न
मोऽस्तुते ॥ ॐ गौर्यै नमः॥ इत्यनेन पाद्यादिभिः संपूज्य । कुंकुमं कामदं दिव्यं कामनाकामस
॥१०॥ भवम् ॥ कुंकुमेनार्चिते देवि गृहाण परमेश्वरि ॥ १ ॥ हरिद्रानिर्मितं देवि सौभाग्यं सुखसंपदा ।
अतस्त्वां पूजयिष्यामि गृहाण परमेश्वरि ॥ २ ॥ अबीरं च गुलालं च चोवा चंदनमेव च । अबीरे
णार्चितादेवि ततः शांतिं प्रयच्छमे ॥ ४ ॥ सिंदूरं शोभनं रक्तं सौभाग्यं प्रियवर्धनम् ॥ सुखदं मोक्ष
दं चैव सिंदूरं प्रतिगृह्यताम् ॥ ४ ॥ अक्षताश्च सुरश्रेष्ठकुंकुमाक्ताः सुशोभिताः । मया निवेदिता
भक्त्या गृहाण परमेश्वरि ॥ ५ ॥ माल्यादीनिसुगंधीनि मालत्यादीनि वै प्रभो । मयाहृतानि पूजार्थं
पुष्पाणि प्रतिगृह्यताम् ॥ ६ ॥ वनस्पतिरसोत्पन्नः सुगंधाढ्यो मनोहरः । आघ्रेयः सर्वदेवानां धू
पोऽयं प्रतिगृह्यताम् ॥ ७॥ साज्यं च वर्तिसंयुक्तं वह्निना योजितं मया ॥ दीपं गृहाण देवेशि त्रैलोक्य ॥१७॥
तिमिरापहम् ॥ ८ ॥ शर्कराखण्डखाद्यानि दधिक्षीरघृतानि च ॥ आहारं भक्ष्य भोज्यं च नैवेद्यं
प्रतिगृह्यताम् ॥ ९ ॥ गंगाजलं समानीतं सुवर्णकलशोद्धृतम् ॥ देवेश्याचमनीयंते प्रीत्यर्थं प्रति

गृह्यताम् ॥ १० ॥ इदं फलं मया देवि स्थापितं पुरतस्तव ॥ तेन मे सुफलावाप्तिर्भवेज्जन्मनिज
न्मनि ॥ ११ ॥ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ॥ अनंतपुण्यफलदमतः शांतिं प्रय
च्छ मे ॥ १२॥ यानि कानि च पापानि जन्मांतरकृतानि च ॥ तानि तानि विनश्यंति प्रदक्षिणपदे
पदे ॥ १३ ॥ पुष्पांजलिं निवेद्य नतिं कुर्यात् । इति संक्षेपतो गौरीपूजनम् ॥ १३ ॥ अथ ग्रहाणांस्था
पनपूजनप्रकारमाह । रक्तपुष्पाक्षतान्गृहीत्वा आवाहयेत् । सप्तम्यां विशाखान्वितायां कालिंगे
जातं कश्यपगोत्रं लोहितवर्णं वर्तुलाकृतिमंडलमध्यस्थं प्राङ्मुखं द्विभुजं पद्महस्तं सप्ताश्वरथवा
हनं क्षत्रियाधिपतिमीश्वराधिदैवतमग्निप्रत्यधिदैवतसहितं सूर्य्यमावाहयामि । ॐभूर्भुवः स्वः
भगवन् सूर्य इहागच्छ इह तिष्ठ इमं यज्ञमभिरक्ष इत्यावाह्य । ॐ आकृष्णेन रजसावर्तमानो निवेश
यन्नमृतं मर्त्यं च ॥ हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥ पद्मासनः पद्मकरः
पद्मगर्भसम द्युतिः ॥ सप्ताश्वः सप्तरज्जुश्च द्विभुजः स्यात्सदा रविः ॥ १ ॥ इति मंत्रेण पाद्यादिभिः
सूर्य्यं संपूज्यानेनैव मंत्रेण रक्तपताकादानम् । इति सूर्यपूजनम् ॥ १४ ॥ अथ चन्द्रावाहनम् ।

श्वेतपुष्पाक्षतान्गृहीत्वाऽऽवाहयेत् । ॐ चतुर्दश्यां कृत्तिकान्वितायां समुद्रे जातमत्रिगोत्रं श्वेत
वर्णं चतुरस्राकृतिमण्डलात्पूर्वदक्षिणदिक्स्थं पश्चिमाभिमुखं दशाश्वरथवाहनं विशांपतिमुमा
धिदैवतं जलप्रत्यधिदेवतसहितं चंद्रमावाहयामि । ॐ भूर्भुवः स्वः चंद्र इहागच्छ इह तिष्ठ इमं यज्ञम
भिरक्ष इत्यावाह्य । ॐ इमं देवेतिमंत्रेण पाद्यादिभिश्चंद्रं संपूज्यानेनैव मंत्रेण श्वेतपताकादानम् ।इतिचंद्र
पूजनम् ॥ २ ॥ १५ ॥ अथ भौमावाहनम् । रक्तपुष्पाक्षतान्गृहीत्वा आवाहयेत् । दशम्यां
पूर्वाषाढान्वितायामवंत्यां जातं भारद्वाजगोत्रं रक्तवर्णं त्रिकोणं मण्डलाद्दक्षिणदिग्विभागस्थं दक्षि
णाभिमुखं मेषवाहनं क्षत्रियाधिपतिं स्कंदाधिदैवतं क्षितिप्रत्यधिदैवतसहितं भौममावाहयामि ।
ॐ भूर्भुवः स्वः भौम इहागच्छ इह तिष्ठ इमं यज्ञमभिरक्ष इत्यावाह्य ॥ ॐ अग्निर्मूर्द्धेतिमंत्रेण पाद्यादि
भिः भौमं संपूज्य अनेनैव मंत्रेण रक्तपताकादानम् । इति भौमपूजनम् ॥ ३ ॥ १६ ॥ अथ बुधावा
हनम् । हरित्पुष्पाक्षतान्गृहीत्वा आवाहयेत् । द्वादश्यां धनिष्ठान्वितायां मगधदेशे जातमत्रिगोत्रं
हरिद्वर्णं बाणाकृतिं मण्डलात्पूर्वोत्तरस्थमुत्तराभिमुखं शूद्राधिपतिं सिंहवाहनं नारायणाधिदैवतं

विष्णुप्रत्यधिदैवतसहितं बुधमावाहयामि ॐ भूर्भुवः स्वः बुध इहागच्छ इह तिष्ठ इमं यज्ञमभिरक्ष इत्यावाह्य ॐ उद्बुध्यस्वाग्ने इति मंत्रेण पाद्यादिभिर्बुधं संपूज्य अनेनैव मंत्रेण हरितपताकादानम् । इति बुधपूजनम् ॥ ४ ॥ १७ ॥ अथ गुर्वावाहनम् । पीतपुष्पाक्षतान्गृहीत्वा आवाहयेत् । एकादश्यामुत्तराफाल्गुनीयुतायां सिंधुदेशे जातमांगिरसगोत्रं गोरोचनाभं दीर्घचतुष्कोणाकृतिं मंडलादुत्तराभिमुखं सिंहवाहनं ब्रह्माधिदैवतमिंद्रप्रत्यधिदैवतसहितं गुरुमावाहयामि ॐ भूर्भुवः स्वः गुरो इहागच्छ इह तिष्ठ इमं यज्ञमभिरक्ष इत्यावाह्य ॐ बृहस्पते इतिमंत्रेण पाद्यादिभिः गुरुं संपूज्यअनेनैव मंत्रेण पीतपताकादानम् । इति गुरुपूजनम् ॥ ५ ॥ १८ ॥ अथ शुक्रावाहनम् । श्वेतपुष्पाक्षतान्गृहीत्वाऽऽवाहयेत् । नवम्यां पुष्ययुतायां भोजकटे जातं भार्गवगोत्रं शुक्लवर्णं पंचकोणं मंडलात्पूर्वदिक्स्थं पूर्वाभिमुखं श्वेताश्ववाहनमिंद्राधिदैवतमिंद्राणी प्रत्यधिदैवतसहितं शुक्रमावाहयामि ॐ भूर्भुवः स्वः शुक्र इहागच्छ इह तिष्ठ इमं यज्ञमभिरक्ष इ० ॐ अन्नात्परीतिमंत्रेण पाद्यादिभिः शुक्रं संपूज्य अनेनैव मंत्रेण श्वेतपताकादानम् ॥ इति शुक्रपूज

नम् ॥ ६ ॥ १९ ॥ अथ शन्यावाहनम् । बिल्वपत्राक्षतान्गृहीत्वावाहयेत् । अष्टम्यां रेवती युतायां सौराष्ट्रे जातं काश्यपगोत्रं लोहवर्णं धनुराकृतिं मण्डलात्पश्चिमस्थं पश्चिमाभिमुखं गृध्र वाहनं संकरजातिं यमाधिदैवतं प्रजापतिप्रत्याधिदैवतसहितं शनिमावाहयामि ॐ भूर्भुवः स्वः शने इहागच्छ इह तिष्ठ इमं यज्ञमभिरक्ष इ० ॐ शन्नोदेवीतिमंत्रेण पाद्यादिभिः शनिं संपूज्यानेनैव मंत्रेण कृष्णपताकादानम् । इति शनिपूजनम् ॥ ७ ॥ २० ॥ अथ राहोरावाहनम् । कृष्णपुष्पाक्षता न्गृहीत्वावाहयेत् । पौर्णमास्यां भरणीयुतायां बर्बरे जातं पैठीनसिगोत्रं कृष्णवर्णं शूर्पाकृतिं मण्ड लात्पश्चिमदक्षिणादिक्स्थं दक्षिणाभिमुखं शूद्राधिपतिं सिंहवाहनं कालाधिदैवतं सर्पप्रत्यधिदैव तसहितं राहुमावाहयामि ॐ भूर्भुवः स्वः राहो इहागच्छ इह तिष्ठ इमं यज्ञमभिरक्ष इत्या० ॐ कया नश्चित्रेतिमंत्रेण पाद्यादिभिः राहुं संपूज्यानेनैवमंत्रेण कृष्णपताकादानम् । इति राहुपूजनम् ॥ ॥ ८ ॥ २१ ॥ अथ केत्वावाहनम् । कृष्णपुष्पाक्षतान्गृहीत्वा आवाहयेत् ॥ अमावास्यायामा श्लेषान्वितायां जातं जैमिनिगोत्रं धूम्रवर्णं ध्वजाकृतिं कपोतवाहनमंत्यजाधिपतिं मंडलात्पश्चि

मोत्तरस्थं दक्षिणाभिमुखं चित्रगुप्ताधिदैवतं ब्रह्मप्रत्यधिदैवतसहितं केतुमावाहयामि
ॐ भूर्भुवः स्वः केतो इहागच्छ इह तिष्ठ इमं यज्ञमभिरक्ष इत्यावाह्य ॐ केतुंकृण्वन्निति मंत्रेण पाद्यादि
भिः केतुं संपूज्य अनेनैव मंत्रेण धूम्रपताकादानम् ॥ इति केतुपूजनम् ॥९॥२२॥ अथ गणेशक
लशगौरीशानभागे यज्ञेश्वरकलशस्थापनम् । तद्यथा । अश्वत्थगौरमृत्तिकापंचरत्नसर्वौषधि
फलद्रव्यवस्त्राम्रपल्लवसंयुतं कलशमैशान्यां स्थापयेत् । तत्र पठनीयोमंत्रः । ॐ सूर्यायत्वायुषं नि
र्वापयामि ॐ चंद्रायत्वायुषं निर्वापयामि इति । अनेनैव मंत्रेण कलशमध्ये अक्षतगंधपुष्पांतप्रक्षे
पः । अनेनैव कलशजलेन यज्ञान्ते यजमानमभिषिंचेत् ॥ इति नवग्रहपूजनविधिः ॥ २३ ॥
अथ सर्वतोभद्रमंडलदेवताः पुराणोक्तरीत्या लिख्यन्ते ॥ त्वं वै चतुर्मुखो ब्रह्मा सत्यलोके पिता
महः । आगच्छ मंडले चास्मिन्मम सर्वार्थसिद्धये ॥ इति मध्ये ब्रह्माणम् ॥ १ ॥ क्षीरोदार्णवसंभूत
लक्ष्मीबंधो निशाकर । मंडले स्थापयाम्यत्र सोमं सर्वार्थसिद्धये ॥ इ० उत्तरे सोमम् ॥ २ ॥
ईशानीपालकं श्रेष्ठं सर्वलोकभयंकरम् । मंडले स्थापयामीह ईशानं सर्वसिद्धये ॥ इ० ऐशान्या

मीशानम् ॥ ३ ॥ सर्वलोकाधिकं श्रेष्ठं देवर्षीणां च पालकम् । पूर्वदिक्पालकं देवराजानं स्थापया
म्यहम् ॥ इ०पू० इंद्रम् ॥ त्रिपादं मेषवाहं च त्रिशिखं च त्रिलोचनम् । आग्नेय्यां स्थापयाम्यत्र
ह्यग्निं पुरुषमुत्तमम् ॥ इत्याग्नेय्यामग्निम् ॥५॥ अंतकः सर्वलोकानां धर्मराज इति श्रुतः । अतस्त्वां
स्थापयाम्यत्र दक्षिणस्यां स्थिरो भव ॥ इति द० यमम् ॥ ६ ॥ नैर्ऋत्यां वसतिर्यस्य घोररूपी
सदाहि यः ॥ नैर्ऋतिं स्थापयाम्यत्र नैर्ऋत्यां मंडले शुभे ॥ इति नैर्ऋत्यां निर्ऋतिम् ॥ ७ ॥ अपां
पतिं पाशधरं यादसांपतिमुत्तमम् । वरुणं स्थापयाम्यत्र वारुण्यां मंडले शुभे॥इति पश्चिमे वरुणम्॥
॥८॥ आशुगं स्पर्शबोधं च गंधवाहं सुशीतलम् । मंडले स्थापयामीह वायव्यां वायुमुत्तमम् ॥इति
वायव्यां वायुम् ॥ ९ ॥ धरोध्रुवश्च सोमश्चाप्याशुगश्च नलोनलः । प्रत्यूषश्च प्रभासश्च वस्वष्टकमि
हास्थिरम् ॥ वायुसोमयोर्मध्ये वसून् ॥ १० ॥ त्रिनेत्राय त्रिरूपाय त्रिजटाय महात्मने । नमस्कृत्वा ॥१३॥
स्थापयामि मंडलोपरिमध्यतः ॥ सोमेशानयोर्मध्ये रुद्रम् ॥ ११ ॥ आदित्यं भास्करं चैव प्रभाकर
दिवाकरौ । सूर्य्यं ग्रहपतिं चैव अग्नं तेजो हरिद्धरिम् । सप्ताश्वं वेदमूर्त्तिं च त्रिदैवत्यं क्रमेण च॥इत्यादि

द्वादशादित्यान्मंडले स्थापयाम्यहम्॥ईशानेंद्रयोर्मध्ये द्वादशादित्यान् ॥ १२ ॥ अश्विनौ देववैद्यौ च सर्गस्थित्यंतकारकौ । मंडले स्थापयित्वा तुपूजयामीष्टसिद्धये॥इंद्राग्न्योर्मध्ये अश्विनौ ॥१३ ॥ दैवेकर्मणि पित्र्ये च ये मुख्यास्सर्वदाशुभाः ॥मंडलेस्थापयामीहसुखानुष्ठानसिद्धये ॥ अग्नियमयोर्मध्ये विश्वान्देवान् ॥१४॥ यहृच्छया पर्यटंति यक्षराजा महीतले । कौतुकं प्रेक्षितुं चास्मिन्मंडले स तुसुस्थिराः ॥ यमनिर्ऋत्योर्मध्येयक्षान् ॥१५ ॥ अनंतो वासुकिश्चैव कालीयो मणिभद्रकः । शंखश्च शंखपालश्च कर्कोटकधनंजयौ ॥ धृतराष्ट्रश्च नागेशाः प्रगृह्णंतु ममार्चनम् ॥निर्ऋतिवरुणयोर्मध्ये नागान् ॥ १६॥ उर्वशीप्रमुखाः सर्वाः स्वर्वेश्याः शक्रपूजिताः । गंधर्वैश्च सहायां तु मंडलेऽस्मिन्सुशोभनाः ॥ वरुणवाय्वोर्मध्ये गंधर्वाप्सरसः ॥१७॥ त्रियंबकं त्रिपुरुषं नीलकंठं सदाशिवम् । मंडले स्थापयामीह सुखानुष्ठानसिद्धये ॥ ब्रह्मसोमयोर्मध्ये रुद्रम् ॥१८॥षडाननं चतुर्हस्तं स्कंदं गौरीसुतं शुभम् । इहैव पूजयिष्यामि सर्वकामार्थसिद्धये ॥ रुद्रसोमयोर्मध्ये स्कंदम् ॥ १९ ॥ शिवद्वारगतस्त्वं च शिववाहनमुत्तमम् । पार्वत्यां प्रीतिकृन्नित्यामिहागच्छास्थिरोभव ॥ तत्रैव नांदिनं शूलम

हाकालौ च पूजयेत् ॥२० ॥ अदितिर्देवमाता त्वं दक्षपुत्रीसुशोभना । मंडलेऽस्मिन्समागच्छयावत्पू
जास्थिराभव ॥ तत्रैवादितिम् ॥ २१ ॥ दक्षोसि सर्वकार्येषु महायज्ञकरप्रियः ॥ ऋषिश्च सर्वदादक्ष
मंडलेऽस्मिन्स्थिरोभव॥ तत्रैव दक्षम् ॥ २२ तामग्निवर्णां तपसा ज्वलंतीं सर्वदाशुभाम् ॥
भक्तानां वरदां नित्यां दुर्गामावाहयाम्यहम् ॥ ब्रह्मेंद्रयोर्मध्ये दुर्गाम् ॥ २३ ॥ कृष्णाय
गोपीनाथाय चक्रिणे मुरवैरिणे ॥ नमस्तुभ्यं जगद्धातर्मंडलेऽस्मिन्स्थिरोभव ॥ तत्र कृष्णम्
॥ २४ ॥ ब्रह्माग्न्योर्मध्ये स्वधाम् ॥ २५ ॥ मृत्युरोगानंतकस्य प्रेष्यान्प्राणहरान्गणान् । मंड
ले स्थापयामीह पूजार्थं लोकनाशकान् ॥ ब्रह्मयमयोर्मध्ये मृत्युरोगान् ॥ २६ ॥ कुंकुमाभं सदानं
दंभक्तसंकटनाशनम् । चतुर्बाहुत्रिनेत्रं च मंडलेस्थापयाम्यहम्॥ ब्रह्मानिर्ऋतिमध्ये गणेशम् ॥ २७॥
पावनाः सर्वलोकानां निमग्नाः शुद्धिकारकाः । सर्वपापहराः श्रेष्ठमंडले स्थापयाम्यहम् ॥ ब्रह्म
वरुणयोर्मध्ये अपः ॥ २८ ॥ सुगंधिनश्च शैलाद्या मंदमंदवहाः सदा । तानहं स्थापयामीह मरुतो
मंडले शुभे ॥ ब्रह्मवाय्वोर्मध्येमरुतः ॥ २९ ॥ पृथिव्याधार्यते विश्वं दुर्ग्रहं सागरैर्नरैः । अत

स्त्वां स्थापयामीह ब्रह्मणो मंडले पदे॥ब्रह्मणः पादमूले पृथिवीम् ॥२०॥गंगे च यमुने चैव गोदावरि
सरस्वति ॥ नर्मदे सिंधुकावेर्यौ मंडले स्थापयाम्यहम् ॥ ब्रह्मणः पादमूले नदीः॥२१॥समुद्राः सर्वं
तोयेषु श्रेष्ठावै हरिवल्लभाः । मंडले स्थापयामीह तान्नदीशान्सुखाप्तये ॥ ब्रह्मणः समंतात्सप्तसागर
रान्–क्षारसागरं क्षीरसागरं दधिसा० घृतसा० इक्षुसा० सुरासा० स्वादूदकसा० ॥. २२ ॥ तद्बुप
रिमिरुं नाममंत्रेण पूर्वादिदिक्षु इन्द्राणीं स्वाहां प्रथमां नैर्ऋतिं वारुणीं वायवीं कुबेरप्रियां रुद्रा
णीम् । पूर्वादिदिक्षु वज्रं शक्तिं दंडं खड्गं पाशमंकुशं गदां त्रिशूलम् ॥ २३ ॥ पुनः पूर्वादिदिक्षु
गजं मेषं महिषं शवं मकरं मृगं नरं वृषभम्॥२४॥पुनः पूर्वादिदिक्षु ऐरावतं पुंडरीकं वामनं कुमुदम
जनं पुष्पदंतं सार्वभौमं सुप्रतीकम् ॥ २५ ॥ पुनः पूर्वादिचतुर्दिक्षु गणपतिं सप्तमातरः दुर्गां क्षेत्रा
धिपातिं पुनः पूर्वाद्यष्टदिक्षु कश्यपमात्रिं भरद्वाजं विश्वामित्रं गौतमं जमदग्निं वसिष्ठम् अरुं
धतीम् । बाह्यपूर्वादिक्रमेण ऐंद्रीं कौमारीं ब्राह्मीं वाराहीं चामुंडां वैष्णवीं माहेश्वरीं वैनाय
कीम् आवाहयामि इति आवाह्य सर्वतोभद्रमंडलदेवताः पाद्यादिभिः षोडशोपचारैः संपूज्य

नतिं कुर्य्यात् ॥ २४ ॥ अथ षोडशमातृकास्थापनं पूजनं च । गौरी पद्मा शची मेघा सावित्रीवि जयाजया । देवसेना स्वधास्वाहामातरोलोकमातरः । हृष्टिः पुष्टिस्तथातुष्टिरात्मनः कुलदेव ताः । गणेशेनाधिका ह्येता वृद्धौ पूज्यास्तुषोडश ॥ इति पाद्यादिभिः संपूज्य नतिं कुर्य्यात् ॥ अथ स्थलमातृकाणां स्थापनं पूजनं च तद्यथा—ब्राह्मीमाहेश्वरींचैव कौमारी वैष्णवी तथा । वारा ही च तथेंद्राणी चामुण्डाः सप्त मातरः ॥ अथ घृतमातृकापूजनम्—कुड्यलग्नवसोर्द्धाराः पंचधाराघृतेन तु । कारयेत्सप्तधारावानातिनीचानचोच्छ्रिताः ॥ १ ॥ कीर्तिर्लक्ष्मीधृतिर्मे धासिद्धिः प्रज्ञा सरस्वती । मांगल्येषु प्रपूज्याश्च सप्तैता घृतमातरः ॥ २ ॥ ॐ वसोः पवित्रमसिशत धारं व्वसोः पवित्रमसिसहस्रधारम् । देवस्त्वासवितापुनातु व्वसोः पवित्रेण शतधारेण सुप्वाका मधुक्षः ॥ ॐ भूर्भुवः स्वः घृतमातृभ्यो० आवाहनादिपंचोपचारैः संपूज्य अनया पूज याघृतमातरः प्रीयंताम् । अथ इंद्रध्वजपूजनम् । ईशानकोणे स्थापनं तथा चतुष्षष्टिदेव्यावा हनं स्थापनं पूजनं च पाद्यादिभिः षोडशोपचारैः संपूज्य नतिं कुर्यात् तद्यथा—भो देवताःसाधु

घाः सपरिवाराः सवाहना इहागच्छत । आवाहिताभ्यश्चतुस्षष्टिदेवताभ्यः पूजिताभ्यो नमः ॥
अथ तासां नामानि—गजानना १ सिंहमुखी २ गृहस्था ३ काकतुंडिका ४ ॥ उग्रग्रीवा ५ हय
ग्रीवा ६ वाराही ७ शरभानना ८। उलूकी ९ च शिवाख्या १० चमयूरा ११ विकटानना १२॥
अष्टवक्त्रा १३ कोटराक्षी १४ कुब्जा १५ विकटलोचना १६ । शुष्कोदरी १७ ललज्जिह्वा १८
शवदंष्ट्रा १९ वरानना २० ॥ ऋक्षाक्षी २१ केकराक्षी २२ च बृहत्तुंडा २३ सुराप्रिया ॥२४॥ कपा
लहस्ता २५ रक्ताक्षी २६ शुकी २७ श्येनी २८ कपोतिका २९॥ पाशहस्ता ३० दंडहस्ता ३१
प्रचंडा ३२ चंडविक्रमा ३३ ॥ शिशुघ्नी ३४ पापहंत्री ३५ च काली ३६ रुधिरपायिनी ३७॥ वसा
धरा ३८ गर्भभक्षा ३९ शवहस्तां ४० ऽत्रमालिनी ४१॥ स्थूलकेशी ४२ बृहत्कुक्षिः ४३ सर्पास्या
४४ प्रेतवाहना ४५ ॥ दंदशूककरा ४६ क्रौंची ४७ मृगशीर्षा ४८ वृषानना ४९ ॥ व्यात्ताशा ५०
धूमनिःश्वासा ५१ व्योमैकचरणो ५२ र्ध्वदृक् ५३ ॥ तापिनी ५४ शोषिणीदृष्टिः ५५ कोटरी
५६ स्थूलनासिका ५७॥ विद्युत्प्रभा ५८ बलाकास्या ५९ मार्जारी ६० कटपूतना ६१॥ अट्टाट्टहासा

